२

## कथासारः ।

**प्रथमाङ्के** — श्रीमतो धनञ्जयस्य सुभद्राप्राप्तये द्वारवतीं गच्छतोऽलम्बुसकृच्छ्रात् सुभद्रायाः परित्राणं, ततः परस्परगुणाकर्णनपूर्वप्ररूढे परस्परानुरागे विद्यमान एव सन्दर्शनघटनायामेतस्यामविदितपरस्परयोरेवोभयोर्नवयोरिव नवानुरागोदयः, अथ सुभद्रायामन्याविदितं गरुत्मता द्वारकां नीतायां पूर्वानुरागानुगुणं चेष्टितुमर्जुनस्य परिव्राजकवेषपरिग्रहप्रतिज्ञा, तदनु नवानुरागविषयभूताया गात्रिकामुपलभ्य तत्र स्वनामोल्लेखदर्शनेन तस्याः स्वस्मिन्ननुरागमाकलय्योभयप्राप्तये द्वारकाप्रयाणं चोपवर्ण्यते ॥

**द्वितीयाङ्के** — यतिवेषधारिणः फाल्गुनस्य सङ्कर्षणवासुदेवाभ्यां सत्कारः, ततः सङ्कर्षणाज्ञयैव तस्य माधवीलतामण्डपप्रापणं, तत्रान्तर्धाय स्वप्रतीतिविषये द्वे अपि सुभद्रामेकामेव पश्यतस्तद्वाक्यैरेव पुरुषद्वयविषयकत्वेऽपि तस्या भावबन्धस्यान्ततः स्वैकविषयकत्वं निर्धार्य सुभद्रासमीपोपसर्पणम्, अथैनं दृष्ट्वा त्रिधाभूतमदनप्रवाहायां सुभद्रायां यथावत् परिपूज्यास्य पुरतः स्थातुमक्षमतया भिक्षासम्पादनाय गतायामर्जुनस्य विदूषकाय स्वानुष्ठितयावत्कृत्यनिवेदनं च प्रतिपाद्यते ॥

**तृतीयाङ्के** — तथा तथा मदनावस्थामनुभवन्न[illegible] विदूषकेण सह यावद् विनोदक्षमं सुभद्रावासभूतं सहकारमण्डपमुपसृत्यान्तरधीयत, [illegible] तस्यास्तृतीयमनोरथस्यापि स्वमेव विषयं तद्वाक्येन निश्चिकाय । ततस्तत्तन्मदनकृच्छ्रमनुभवितुमपारयन्त्यां सुभद्रायां स्वजन्मैव पुरुषत्रयविषयाभिलाषेण कश्मलं विचिन्त्य मर्तुं व्यवसितायामर्जुनः प्रकटीभूय तस्या भावप्रवाहत्रयस्यापि स्वमेव विषयं निरूपयन् गान्धर्वाय तामुपरुरोध । अथ वासुदेवानुमतिमेव प्रतीक्षमाणायां तस्यां स्मृतमात्रसन्निहितौ माधवमहेन्द्रौ तयोः परिणयं यथावन्निरवर्तयताम् ॥

**तुरीयाङ्के** — सुभद्रया वाह्यमानतुरगं रथमारुह्यार्जुनेऽनुधावतोऽन्धकवृष्णियोधवीरान् बाणवेगैर्निवर्त्य सुभद्राप्रार्थनया क्रुद्धमपि मुसलायुधमुपेक्ष्य खाण्डवप्रस्थमनुगते वासुदेवो बलभद्रं प्रसाद्य 'विवाहोत्सवमनुभवितुं खाण्डवप्रस्थं प्रतिशौवस्तिकगमनायान्धकचक्रं सन्नाहये'ति सात्यकिमादिदेश ॥

२

पञ्चमाङ्के — सुभद्रामलम्बुसेन रक्षसापहृत्य विशसितां श्रुत्वार्जुनः शोकावेगपरवशो मोहादुत्तारितोऽपि विदूषकेण दुःखस्यासह्यतया मर्तुं व्यवस्यन् वीरेऽवतारितो यावद् धनुरादत्ते, तावद् देवी कात्यायनी गृहीतपाञ्चालीवेषा तस्माद् रक्षसः परित्राय सुभद्रामर्जुनाय समर्पयन्ती विस्मितं तमकरोत् । अथ साक्षाद् द्रौपद्यामत्रागत्य धृताद्भुतायां देवी प्रदर्शितस्वरूपा सवत आशिषः प्रयुज्य तिरोदधे । ततो युधिष्ठिरवृकोदरवासुदेवैः स्वगौरवानुरूपमभिनन्दितौ सुभद्रार्जुनौ समीहितसिद्ध्या परमानन्दनिर्वृतावभूताम् ॥